चतुरङ्गक्रीडायामिव चतुःषष्टिकोष्ठान् लिखित्वा ( प्रथमपङ्क्तौ आर्षीनाम लिखित्वा द्वितीयादिकोष्ठेष्वङ्कानामुपरि गायत्र्यादिलक्षच्छन्दसां नामानि विन्यसेत्। ) तत्र द्वितीयायां पङ्क्तौ प्रथमे कोष्ठे दैवीशब्दं विन्यसेत्, संज्ञाज्ञापनार्थम्। द्वितीये एक संख्याकमङ्कं विन्यसेत्॥ ३॥

एकाक्षर छन्दको दैवीगायत्री कहते हैं। गायत्री उष्णिक् आदि सात प्रकार छन्द होते हैं। उनमें हर एकके दैवी, आसुरी, प्राजापत्या, याजुषी, साम्नी, आर्षी और ब्राह्मी, ये आठ भेद होते हैं। कौन कितने अक्षरोंका होता है इसे अच्छी तरह समझानेके लिये हलायुधभट्टने एक मण्डल तैयार किया है उस मण्डलको इस अध्याय की समाप्तिमें दिखलाया जायगा। उसके बनानेकी पद्धति यह है कि सतरञ्ज के खेल की तरह आठपंक्तिके चौसठ कोष्ठका एक मण्डल बनाओ। फिर उसकी पहली पंक्तिके प्रथम कोष्ठमें आर्षी ऐसा लिखो। द्वितीयसे अष्टम कोष्ठ तकके ऊपर भागमें क्रमशः गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पंक्ति, त्रिष्टुप् और जगती छन्दोंका नाम लिखो पुनः द्वितीय पंक्तिके प्रथम कोष्ठमें दैवी ऐसा शब्द लिखो। संज्ञा समझानेके लिये द्वितीय कोष्ठमें [१] अङ्क लिखना चाहिये ॥ ३ ॥

## आसुरी पञ्चदश ॥ ४ ॥

(१)आसुरी गायत्री पञ्चदशाक्षरा। तानि चाक्षराणि 'ग्लौ' (पि० सू० १।१४) इत्यधिकाराद्गुरूणि लघूनि च यथासम्भवं द्रष्टव्यानि। अत्र तृतीयायां पङ्क्तौ प्रथमे कोष्ठे आसुरीशब्दं व्यवस्थाप्य द्वितीये कोष्ठे पञ्चदश [१५] संख्याङ्कं लिखेत्॥ ४॥

पन्द्रह अक्षरोंकी असुरी गायत्री होती है। "ग्लौ" ( १।१४ ) गुरु और लघु का अधिकार चल रहा है इसलिये आसुरी गायत्री आदि शब्दोंमें कहे गये अक्षरों से गुरु और लघुसंज्ञक दोनोंका ग्रहण करना चाहिये। पूर्वोक्त मण्डलकी तृतीय पंक्तिके प्रथम कोष्ठमें आसुरी शब्द लिखकर द्वितीय कोष्ठमें[१५]पन्द्रह अङ्क लिखना चाहिये ॥ ४ ॥

---

(१) पञ्चदशाक्षरा गायत्री आसुरी भवति। उदाहरणद्वयं यथा—

(क) नमो वरुणाया धिष्ठितो वरुणस्य पाशः॥ (शु० य० ८।२३)

(ख) उपयाम गृहीतोऽसि मित्रावरुणाभ्यां त्वा॥ (शु० य० ७।९)

## प्राजापत्याष्टौ ॥ ५ ॥

(१)प्राजापत्या गायत्र्यष्टाक्षरा भवति। यत्र कचिद्वेदेऽष्टाक्षरं छन्दस्तत्प्राजापत्या गायत्रीति ज्ञेयम्। चतुर्थ्यामत्र पङ्क्तौ प्रथमे कोष्ठे प्राजापत्याशब्दं लिखित्वा द्वितीयेऽष्ट [८] संख्याङ्कं लिखेत् ॥ ५ ॥

जिस छन्दमें आठ [८] अक्षर हों उसे "प्राजापत्या" गायत्री कहते हैं। जहां पर किसी पदमें आठ अक्षरका छन्द हो उसे "प्राजापत्या गायत्री" समझना। पूर्वोक्त मण्डल की चौथी पंक्तिके पहिले कोष्ठमें प्राजापत्या" शब्द लिखकर दूसरे कोष्ठमें [८] आठ ऐसा अङ्क लिखो ॥ ५ ॥

## यजुषां षट् ॥ ६ ॥

(२)यजुषां गायत्री षडक्षरा भवति। यत्र कचिद्वेदे षडक्षरं छन्दस्तद्याजुषी गायत्रीति संज्ञायते। अत्र पञ्चम्यां पङ्क्तौ प्रथमे कोष्ठे याजुषीशब्दं व्यावस्थाप्य द्वितीये षट् [६] —संख्याङ्कं लिखेत् ॥ ६ ॥

जिस छन्दमें छः अक्षर हों उसे "याजुषी गायत्री" कहते हैं। जहां कहीं वेदमें छः अक्षरोंका छन्द दीख पड़े उसे "याजुषी गायत्री" समझना। पूर्वोक्त मण्डलकी पांचवीं पंक्तिके पहिले कोष्ठमें याजुषी शब्द लिखकर उसी पंक्तिके दूसरे कोष्ठमें छः [६] अङ्क बैठाना ॥ ६ ॥

## साम्नां द्विः ॥ ७ ॥

---

(१) प्राजापत्यागयत्र्या उदाहरणद्वयं—यथा

(क) अग्निर्वर्चो ज्योतिर्वर्चः।
(ख) ज्योतिः सूर्यः सूर्यो ज्योतिः। } शु० य० ३।९
(ग) अप नः शोशुचदघम् (शु० य० २२।१९)

(२) षडक्षरा गायत्री याजुषी संज्ञका भवति। उदाहरणत्रयं यथा—

(क) सुत्राम्णे पच्यस्व
(ख) अस्यश्विभ्यां पच्यस्व } (शु० य० १९।१)
(ग) 'वर्षं वृद्धमसि' (य० तै० सं० १।१।२) ॥२॥

(१)षडित्यनुवर्तते । द्विरिति क्रियाभ्यावृत्तिदर्शनात्करोतिरध्याहियते । द्वादशाक्षरेत्यभ्यावृत्त्या क्रियते । तेन द्विः कृता द्विगुणिता षट्संख्या साम्नी गायत्री भवति । यत्र क्वचिद्वेदे द्वादशाक्षरं छन्दः तत्साम्नां गायत्रीति संज्ञायते । अत्र षष्ठयां पङ्क्तौ प्रथमे कोष्ठे सामशब्दं लिखित्वा द्वितीये द्वादश [ १२ ] संख्याङ्कं लिखेत् ॥ ७ ॥

पूर्वसूत्रसे ( षट् ) इसपदकी अनुवृत्ति होती है 'द्विः' इस पदमें क्रियाकी आवृत्ति अर्थमें सुच् (२)प्रत्यय होता है । हिन्दीमें उसका अर्थ दोहराना या दो वार उच्चारण करना होता है । इससे छः संख्याके दोहरानेसे अर्थात् दोगुणा करने से जो संख्या होती हो वह संख्या "साम्नी गायत्री" की आती है । तात्पर्य्य यह हुवा कि जहां कहीं वेदमें बारह [ १२ ] अक्षरों का छन्द दीख पड़े उसे "साम्नी गायत्री" समझना । पूर्वोक्त मण्डलकी छठी पंक्तिके पहिले कोठेमें साम शब्द-लखकर उसी पंक्तिके दूसरे कोठेमें बारह [ १२ ] अङ्क रखना चाहिये ॥ ७ ॥

(३)ऋचां त्रिः ॥ ८ ॥

षडित्यनुवर्त्तते । अत्रापि पूर्ववत् क्रियाभ्यावृत्तिः, तेन त्रिगुणिता षट्संख्या ऋचां गायत्री भवति । यत्र क्वचिद्वेदेऽष्टादशाक्षरं छन्दस्तदृचां गायत्री ज्ञेया । अत्र सप्तम्यां पङ्क्तौ प्रथमे कोष्ठे ऋक्शब्दं व्यवस्थाप्य द्वितीयेऽष्टादश [१८] संख्याङ्कं लिखेत् ॥ ८ ॥

---

(१) 'साम्नां द्वादश' (१६।१२) इति ऋक्प्रातिशाख्यसूत्रेण "साम्नां स्याद् द्वादशाक्षरा" इत्याग्नेयच्छन्दःसार वचनेन च सामगायत्र्या द्वादशाक्षरत्वं सिद्धतीति ज्ञेयम् ।

उदाहरणार्थं यथा—

(क) वाचे मे वर्चोदा वर्चसे पवस्व ( शु० य० ७।२७ )

(ख) अग्निं पुरीष्यमङ्गिरस्वद्भरामः । ( शु० य० ११।४७ )

(ग) घृतेन सीता मधुना समज्यताम् ( शु० य० १२।७० )

( २ ) द्वित्रिचतुर्भ्यः सुच् ( पा० सू० ५।४।१८ )

( ३ ) आर्ची गायत्री यथा—

(क) नमो वञ्चते परिवञ्चते स्तायूनां पतये नमः ( शु० य० १६।२१ )

(ख) वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वत् ( शु० य० ११।६० )

'षट्' इस पदकी अनुवृत्ति आती है। इस सूत्रमें भी क्रियाकी आवृत्ति पूर्ववत् समझना। छः संख्याको तीन से गुणा करनेपर जो संख्या होती है वही "आर्ची गायत्री" की संख्या है। अर्थात् जहां कहीं वेदमें आठारह [१८] अक्षरों का छन्द होता है। उसे "आर्ची गायत्री" समझना।

अब पूर्वोक्त मण्डलकी सातवीं पंक्तिके पहिले कोठेमें 'आर्ची' शब्द लिखकर उसी पंक्तिके दूसरे कोठेमें अठारह १८ अङ्क रखो ॥८॥

## द्वौ द्वौ साम्नां(१) वर्धेत ॥ ९ ॥

गायत्रीत्यनुवर्तते। साम्नां पङ्क्तौ गायत्री द्वौ द्वौ संख्याङ्कौ गृ-

(१) तत्र सामोष्णिक् यथा—

उदायुषा स्वायुषोदस्थाममृताँ ऽऽ अनु ॥' (शु० य० ४।२८)

सामानुष्टुप् यथा—

रात्रिः केतुना जुषताँ सुज्योतिर्ज्योतिषा स्वाहा ॥ (शु० य० ३६।२१)

सामबृहती यथा—

(क) दिवः सूनुरस्यैष ते पृथिव्याँल्लोक आरण्यस्ते पशुः। (शु० य० ६।६)

(ख) परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भज। (शु० य० ४।२८)

साम्नीपङ्क्तिर्यथा—

(क) एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेहि ॥'

(शु० य० ३८।२५)

(ख) 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥'

(शु० य० ५।२६)

सामत्रिष्टुप् यथा—

(क) 'इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम् ॥'

(शु० य० ८।३७)

(ख) 'उच्छ्रयस्व वनस्पत ऊर्ध्वो मा पाह्यँहस आस्य यज्ञस्योदृचः ॥'

(शु० य० ४।१०)

सामजगती यथा—

'अनु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः ॥

(शु० य० ४।२०)

**होत्वा पूर्वात् पूर्वाद्वर्धेत यावदष्टमं कोष्ठं प्राप्नोति तत्र साम्नां पङ्क्तौ तृतीयादिषु कोष्ठेषु क्रमेण वर्धितान्यक्षराण्यङ्केन विन्यसेत् ॥ ६ ॥**

इस सूत्र में भी "गायत्री" पदकी अनुवृत्ति आती है।

छठी पंक्तिमें जो सामगायत्री की संख्या है उसे दो दो संख्यासे बढ़ाकर उसी पंक्तिके तीसरे कोठेसे आठवें कोठे तक बैठाना।

अर्थात् छठी पङ्क्तिके दूसरे कोठेमें सामगा[४]यत्रीका अङ्क [१२] बारह है उसमें दो जोड़ने से तीसरे कोठेमें [१४] हो जाता है, पुनः चौदहमें दो जोड़ने से चौथे कोठेमें [१६] हो जाता है। इसी तरह पांचवें में [१८], छटें में [२०], सातवें में [२२], और आठवें में [२४] बैठेगा। तात्पर्य यह हुआ कि सामगायत्रीमें जो अक्षर संख्या है, उसी संख्यामें दो संख्या और जोड़ देनेसे सामोष्णिक्‌की अक्षर संख्या निकल आती है। इसी प्रकार सामानुष्टुप आदिकी भी

---

(ख) कोसि कतमोऽसि कस्यासि को नामासि। यस्य ते नामामन्महि यं त्वा सोमेनातीतृपाम। (शु० य० ७।२९)

(ग) दक्षिणामारोह त्रिष्टुप् त्वावतु बृहत्साम पञ्चदशस्तोमो ग्रीष्मऋतुः क्षत्रं द्रविणम्। (शु० य० १०।११)

आर्ची त्रिष्टुप् यथा—

(क) एषा ते शुक्र तनूरे तद्वर्चस्तया सम्भव भ्राजं गच्छ। जूरसि धृता मनसा जुष्टा विष्णवे। (शु० य० ४।१७)

(ख) एता असदन्त्सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहिमां यज्ञनियम्॥ (तै सं० १।१।११)

(ग) अग्ने व्रतपते व्रतं चरिष्या मितच्छकेयं तन्मे राध्यताम्। इदमहमनृतात्सत्यमुपैमि। (शु० य० २।५)

आर्चीजगती यथा—

(क) 'बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्'। (तै० सं० १।१।९।६)

(ख) यस्ते अश्वसनिर्भक्षो यो गोसनिस्तस्य त इष्टयजुषस्तुतस्तोमस्य शस्तोक्थस्योप हूतस्योपहूतोभक्षयामि। (शु० य० ८।१२)

अक्षर संख्या निकल आती है। जैसे सामगायत्री की अक्षर संख्या १२ है इसलिये १२+२=१४ सामोष्णिक्। १४+२=१६ सामानुष्टुप्। १६+२=१८ साम-बृहती। १८+२=२० सामपङ्क्तिः। २०+२=२२ सामत्रिष्टुप्। २२+२=२४ सामजगती।

## ओं(१)त्रीनृचाम्॥ १०॥

**गायत्रीत्यनुवर्तते। ऋचां गायत्री त्रींस्त्रीन् संख्याङ्कान् गृहीत्वा पूर्ववद्वर्धेत। अत्राप्यृचां पङ्क्तौ तृतीयादिषु कोष्ठेषु त्रि[३]संख्याङ्क-क्रमेण वृद्धमङ्कं स्थापयेत्॥ १०॥**

इस सूत्रमें भी गायत्री पदका अनुवर्तन होता है, सातवी पङ्क्ति जो "आर्ची गायत्री" का कोष्ठ है उसमें [१८] अठारह संख्या है। उस अठारह संख्या में तीन जोड़नेसे "आर्ची उष्णिक्" की अक्षर संख्या आती है, पुनः तीन जोड़ने

---

(१) आर्ची उष्णिक् यथा—

(क) तदग्निराह तदु सोम आह पूषा मा धात्सुकृतस्य लोके।

(अथ० सं० १६।९।२)

(ख) इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवोऽसि ऐन्द्रमसि वैश्वदेवमसि (तै॰ आ॰ १०।२७)

आर्ची अनुष्टुप् यथा—

(क) 'अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः।'

(शु० य० १९।७५)

(ख) 'देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः।

(तै० सं॰ १।१।५।१)

आर्ची बृहती यथा—

(क) मध्वा यज्ञं नक्षति प्रैणानो नराशंसो अग्निः सुकृद्देवः सविता विश्ववारः

(ऋ० सं० १५।२७।३)

(ख) उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यः एष ते योनि विश्वेभ्यस्त्वा देवेभ्यः॥

(शु० य० ७।३३)

आर्ची पंक्तिर्यथा—

(क) 'वसन्त इन्नुरन्त्यो ग्रीष्मइन्नुरन्त्यः। वर्षाण्यनुशरदो हेमन्तः शिशिर इन्नुरन्त्यः॥'

(सा० सं० पू० ६।२।३।१३)

से आर्ची अनुष्टुप्की अक्षरसंख्या आ जाती है। इसी प्रकार लगातार तीसरे कोठेसे आठवें कोठे तक पूर्व की तरह [३] तीन अङ्क—जोड़े जानेसे क्रमशः तीसरे कोठेमें २१, चौथे में २४, पांचवें में २७, छठे में ३०, सातवें में ३३, और आठवें में ३६ अङ्क बैठेगा।

अतएव १८ अक्षरों की आर्ची गायत्री, २१ अक्षरोंका 'आर्ची उष्णिक्', २४ का "आर्ची अनुष्टुप्', ७२ की "आर्ची बृहती" ३० की "आर्ची पंक्ति, ३३ की "आर्ची त्रिष्टुप्" और ३६ की "आर्ची जगती" होती है।

## (१)चतुरश्चतुरः प्राजापत्यायाः ॥ ११ ॥

**प्राजापत्यायाः पङ्क्तौ गायत्री चतुरश्चतुरः संख्याङ्कान् गृहीत्वा**

---

(१) प्राजापत्योष्णिगादीनां क्रमशः उदाहरणानि प्रदर्श्यन्ते—

तत्र प्राजापत्योष्णिक् यथा—

निर्दग्धꣳरक्षो निर्दग्धा अरातयः।' (तै० सं०का० १ प्र० १ अ० ७)

प्राजापत्यानुष्टुप् यथा—

(क) रेवती रमध्वं बृहस्पते धारयावसूनि (शु० य० ६।८)

(ख) यथायं वायुरेजति यथा समुद्र एजति (शु० य० ८।२८)

प्राजापत्याबृहती यथा—

(क) 'अपां पेरुरस्यापो देवी स्वदन्तु स्वात्तं चित्सद्देवहविः।'

(शु० य० ६।१०)

(ख) 'अग्ने अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः॥'

(शु० य० १२।८)

प्राजापत्या पङ्क्तिर्यथा—

(क) 'उत श्रवसा पृथिवीꣳ सꣳसीदस्व महाँ२ऽअसि रोचस्व देववीतमः॥'

(शु० य० ३८।१७)

(ख) 'प्र व इन्द्राय वृत्रहन्तमाय विप्राय गाथं गायत यं जुजोषषते॥'

(साम० सं० पू० ५।२।६।१०)

प्राजापत्यात्रिष्टुप् यथा—

(क) 'उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एषते योनिरिन्द्राय त्वा षोडशिने॥'

(शु० य० ८।३४)

वर्धेत । अत्रापि तृतीयादिषु कोष्ठेषु विन्यासः पूर्ववदेव ॥ ११ ॥

चौथी पंक्तिमें "प्राजापत्यागायत्री" चार चार संख्या से बढ़ती हुई तीसरे कोठेसे आठवें कोठे तक क्रमशः बैठेगी । अर्थात् उसी पंक्तिके दूसरे कोठेमें "प्राजापत्या गायत्री" को संख्या [८] है अतएव [४] से बढ़ती हुई तीसरे कोष्ठ में बैठेगी १२, चौथेमें १६, पांचवेंमें २०, छठेंमें २४, सातवेंमें १८ और आठवेंमें ३२ । इसलिये "प्राजापत्या उष्णिक्" की अक्षर संख्या १२, "प्राजापत्या अनुष्टुप" की १६, प्राजापत्या बृहती, की २०, "प्राजापत्या पंक्ति" की २४, "प्राजापत्या त्रिष्टुप्" की २८, और "प्राजापत्याजगती" की अक्षरसंख्या ३२ समझना चाहिये ।

## (२)एकैकं शेष ॥ १२ ॥

---

( ख ) 'उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥'

( शु० य० ७।३८ )

प्राजापत्या जगती यथा—

( क ) 'हरिः पतङ्गः पटरी सुपर्णः । दिविक्षयो नभसा य एति स न इन्द्रः कामवरं-ददातु ॥' ( तै० आ० ३।११ )

(ख) प्रत्युष्टँ रक्षः प्रत्युष्टा अरातयो निष्टप्तँ रक्षो निष्टप्ता अरातयः । उर्वन्तरिक्षमन्वेमि ॥

( शु० य० १।७ )

(१) एकैकं शेषे इति सूत्रेण दैव्युष्णिगादीनां याजुष्युष्णिगादीनाञ्चैकदेव स्वरूपं प्रदर्शयत उभयोरेकधर्मत्वात् ।

तत्र दैव्युष्णिगादीनां निदर्शनानिसंस्थाप्यन्तेदैवी उष्णिक् यथा—

( क ) 'भुवः' ( तै० आ० प्र० १० अ० २७ )

( ख ) 'कोऽसि' ( शु० य० ७।२९ )

( ग ) मधु ( शु० य० ३७,१३ )

दैव्यनुष्टुप् यथा—

( क ) 'मखोऽसि' ( तै० आ० ४।२ )

( ख ) 'धूरसि' ( शु० य० १।८ )

( ग ) 'इषेत्वा' ( शु य० १।१ )

दैवी बृहती यथा—

( क ) भूर्भुवः स्वः ।' ( शु० य० ३।५ )

( ख ) 'स्वविदे वेट्।' ( शु० य० १७।१२ )

दैवी पंक्ति यथा—

( क ) बर्हिषदे वेट्।' ( शु० य० १७।१२ )

( ख ) 'नमो गर्णेभ्यः।' ( शु० य० १६।२५ )

( ग ) 'नमः सभाभ्यः।' ( शु० य० १६।२४ )

दैवी त्रिष्टुप् यथा—

( क ) 'नक्षत्रेभ्यः स्वाहा' ( शु० य० २२।२८ )

( ख ) 'अग्नेस्तनूरसि।' ( शु० य० ५।१ )

दैवी जगती यथा—

( क ) 'नमः शङ्कराय च।' ( शु० य० १६।४१

( ख ) 'कनिष्ठाय च नमः।' ( शु०य० १६।३२ )

इदानीं याजुष्युष्णिगादीनां निदर्शनानियथाक्रमं प्रदर्श्यन्ते तत्र याजुष्युष्णिक् यथा—

(क) 'माहिर्भूर्मा पृदाकुः।' ( शु० य० ८।२३ )

( ख ) 'समुद्रं गच्छ स्वाहा।' ( शु० य० ६।२१ )

याजुष्यनुष्टुप् यथा—

( क ) 'अनु त्वा देववीतये।' ( शु० य० ५।९ )

( ख ) 'उपयामगृहीतोऽसि।' ( शु० य० ७।२५ )

(ग) दिव्यं नमो गच्छ स्वाहा ( शु० य० ६।२१)

याजुषी बृहती यथा—

'रक्षोहणं वलगहनम।' ( शु० य० ५।२३ )

'मित्रावरुणौ गच्छ स्वाहा।' ( शु० य० ६।२१ )

याजुषी पङ्क्ति यथा—

( क ) 'होता यक्षदश्विनौ छागस्य।' ( शु० य० २१।४३ )

( ख ) उपयामगृहीतोऽसीषेत्वा।' ( शु० य० ७।३० )

( ग ) 'उपयामगृहीतोऽस्यूर्जे त्वा।' ( शु० य० ७।३० )

अनुक्तः शेषः। यत्र गायत्र्यां संख्यावृद्धिर्नोक्ता सैकैकं संख्याङ्कं गृहीत्वा वर्धेत। दैवी याजुषी च शेष शब्देनोच्यते। आसुर्या विशेषाभिधानात्। तेन दैवी तृतीयादिषु कोष्ठेषु क्रमेणैकैकमक्षरं गृहीत्वा वर्धेत। तथैव याजुषी ॥ १२ ॥

जिन गायत्रियोंके सम्बन्धमें विशेष विधान नहीं किया गया हो उन की अक्षर संख्या एक संख्यासे बढ़ती हुई तीसरे कोठेसे आठवें कोठे तक बैठेगी। दैवी और याजुषी ही ऐसी गायत्री हैं जिनकी सख्यामें वृद्धि का विधान नहीं है। वे "शेष" शब्दसे कही गई है। आसुरी गायत्रीका विशेष विधान आगेके सूत्रसे करने ही वाले हैं। उसकी भी संख्यावृद्धि नहीं होती है। बल्कि संख्याका ह्रास होता है। इसलिये मण्डलकी दूसरी और पांचवी पंक्तिमें जो दैवी और याजुषी कोष्ठ हैं उसमें दैवी गायत्रीकी अक्षर संख्या [१] एक और याजुषी गायत्री की अक्षर संख्या [६] छः है उनकी वृद्धि आठवें कोठे तक एक संख्याके द्वारा होती चलेगी। अर्थात् दैवी उष्णिक् की अक्षर संख्या [२], दैवी अनुष्टुप् की [३], दैवी बृहती की [४], दैवी पंक्तिकी [५], दैवी त्रिष्टुप्की, [६] और दैवी जगती की अक्षर संख्या [७] हैं।

याजुषी उष्णिक्की अक्षर संख्या [७], याजुषी अनुष्टुप्की [८], याजुषी बृहती की, [९], याजुषी पंक्ति की [१०], याजुषी त्रिष्टुप् की [११] और याजुषी जगतीकी अक्षर संख्या [१२] हैं।

## (१)जह्यादासुरी ॥ १३ ॥

---

याजुषी त्रिष्टुप् यथा—

(क) 'होता यक्षत् सरस्वती मेषस्य।' (शु० य० २१।४४)

(ख) अग्निजा असि प्रजापतेरेतः (तै० आ० ४।२।१५)

याजुषी जगती यथा—

'नमः श्रवाय च प्रतिश्रवाय च।' (शु० य० १६ ३४)

नमः शर्वाय च पशुपतये च (तै० सं० ४।५।५।२)

(१) इदानीमासुर्य्युष्णिगादीनां निदर्शनानि यथालब्धानि संख्याप्यन्ते। तत्रासुर्य्युष्णिक् यथा—

(क) 'उपयामगृहीतोऽस्य१ंहसस्पतये त्वा। (शु० य० ७।२७)

**एकैकमित्यनुवर्तते । आसुरी गायत्री एकैकमक्षरं त्यजेत् । उत्तरेषु कोष्ठेषु वृद्धौ प्राप्तायां ह्रासो विधीयते । तेऽङ्काः क्रमेण स्थाप्याः॥१३॥**

पूर्वसूत्रसे एकैक पदका अनुवर्तन होता है तृतीय पंक्तिमें आसुरी गायत्री एक एक संख्या छोड़ती हुई द्वितीय कोष्ठसे अष्टम कोष्ठ तक क्रमशः बैठेंगी। जैसे तृतीय पंक्तिके द्वितीय कोष्ठमें आसुरी गायत्रीकी अक्षर संख्या [१५] पन्द्रह है, उस [१५] से [१] घटाकर तृतीय कोष्ठमें [१४], बैठेगी उस से पुनः [१] एक घटानेसे जो [१३] संख्या होगी वह चतुर्थ कोष्ठमें बैठेगी। इसी प्रकार पञ्चम कोष्ठ में [१२], षष्ठ में [११], और सप्तम में [१०] और नवम कोष्ठ में [९] संख्या बैठेगी ॥१३॥

---

(ख) चक्षुर्म्यां मे वर्चोदसौ वर्चसे पवेथाम्। ( शु० य० ७।२७ )

आसुर्यनुष्टुप् यथा—

(क) 'उपयामगृहीतोऽसि तपस्यायत्वा ।' ( शु० य० ७।३० )

(ख) प्राणाय मे वर्चोदा वर्चसे पवस्व ।' ( शु० य० ७।२७ )

(ग) व्यानाय मे वर्चोदा वर्चसे पवस्व ।' ( शु० य० ७।२७ )

आसुरीबृहती यथा—

(क) 'वाचे मे वर्चोदा वर्चसे पवस्व ।' ( शु० य० ७।२७ )

(ख)उपयामगृहीतोऽसि मघवे त्वा ( शु० य० ७।३० )

आसुरीपंक्ति यथा—

( क ) इन्द्र मरत्व इह पाहि सोमम् ( शु० य० ७।३५ )

(ख) अरिप्रा आपो अप रिप्रमस्मत ।' (अथ० सं० १३।१।१०)

आसुरी त्रिष्टुप् यथा—

उरुष्य राय एषो यजस्व ।' ( शु० य० ७।४ )

स्वधा पितृभ्यःपृथिविषभ्यः। ( अथ० सं० (१८।४।७८)

आसुरीजगती यथा—

(क) सोमायलवाना लभते ।' ( शु० य० २४।२४ )

(ख) 'मधुत्वा मधुला करोतु ।' ( तै० आ० ४।२।१८ )

अर्थात् आसुरी उष्णिक्की अक्षर संख्या [१४], आसुरी अनुष्टुप्की अक्षर संख्या [१३], आसुरी बृहतीकी [१२], आसुरी पंक्तिकी [११], आसुरी त्रिष्टुप् की [१०] और आसुरी जगतीकी अक्षर संख्या [९] होती है ऐसा समझना चाहिये।

**तान्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यः ॥१४॥**

**तानि छन्दांसि गायत्र्याः पुरस्तात् उष्णिग्-अनुष्टुब्बृहती-पङ्क्ति-त्रिष्टुब्-जगत्याख्यानि क्रमेण भवन्ति ॥ १४ ॥**

गायत्री छन्द के अनन्तर द्वितीय कोष्ठसे अष्टम कोष्ठ पर्यन्त क्रमशः उष्णिक्, अनुष्टुप्, बृहती, पंक्ति, त्रिष्टुप् और जगती छन्द होंगे। अर्थात् गायत्री छन्दके जैसे देवी, आसुरी, प्राजापत्या, याजुषी आदि भेद होते हैं उसी प्रकार उष्णिक् आदि छन्दके भी भेद होते हैं। ये भेद पूर्व दिखाये गये हैं।

**तिस्रस्तिस्रः सनाम्न्य एकैका ब्राह्मयः(१) ॥१५॥**

---

(१) इदानीं ब्राह्मी गायत्र्यादीनां यथालब्धानि निदर्शनानि प्रदर्श्यन्ते।

तत्र ब्राह्मी गायत्री यथा—

देवी द्यावापृथिवी मखस्य वामद्य
शिरो राध्यासं देवयजने पृथिव्याः।
मखाय त्वा मखस्यत्वाशीर्ष्णे ॥ (शु० य० ३७।३)

ब्राह्मयुष्णिक् यथा—

देवीद्वारो अश्विना भिषजेन्द्रे सरस्वती। प्राणं न वीर्यं नसि द्वारो दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥ (शु० य० २१।४९)

ब्राह्म्यनुष्टुप् यथा—

अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः। अवदेवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि ॥ (शु० य० ३।४८)

ब्राह्मीबृहती यथा—

प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा। भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा। वृषाग्निं वृषणं भरन्नपां गर्भꣳ समुद्रियम्। अग्न आयाहि वीतये ॥ (शु० य० ११।४६)

ब्राह्मीपंक्तिर्यथा—

याजुषो पङ्क्तिमारभ्य तिस्रो याजुषी, साम्नी, आर्ची चेति गायत्र्यो मिलिता एका षट्त्रिंशदक्षरा ब्राह्मी गायत्री भवति। एनाम्न्य इत्येकसंज्ञा इत्यर्थः। तिस्रस्तिस्र इति वीप्सया परेषामुष्णिगादीनामिह ग्रहणम्। तथैकैकेति वीप्सया ता एव ब्राह्म्यो भवन्तीति विधीयते। ब्राह्म्य इति गायत्र्यादीनां जगतीपर्यन्तानां विशेषणम्। एवं याजुषी, साम्नी, आर्ची चोष्णिङ्मिलिता एकीकृता द्वाचत्वारिंशदक्षरा ब्राह्म्युष्णिग्भवति। एवं तिस्रोऽनुष्टुभः संगताः सत्योऽष्टाचत्वारिंशदक्षरैका ब्राह्म्यनुष्टुब् भवति। ता एव तिस्रो बृहत्यः संगताः सत्यश्चतुःपञ्चाशदक्षरा एका ब्राह्मी बृहती भवति। ता एव तिस्रः पङ्क्तयः संगताः षष्ट्यक्षरा एका ब्राह्मीपङ्क्तिर्भवति। ता एव तिस्रस्त्रिष्टुभः संगतः षट्षष्ठ्यक्षरा एका ब्राह्मी त्रिष्टुप् भवति। ता एव तिस्रो जगत्यः संगता द्वासप्तत्यक्षरा एका ब्राह्मी जगती भवति। अत्राष्टम्यां पङ्क्तौ प्रथमे कोष्ठे ब्राह्मीशब्दं व्यवस्थाप्य द्वितीयादौ क्रमेण गायत्र्यादीनां षट्त्रिंशदा [३६] द्यङ्कान् विन्यसेत् ॥ १५ ॥

याजुषी, साम्नी और आर्ची गायत्री इन तीनोंको मिला देनेसे (३६) अक्षरों

---

अदित्यास्त्वा मूर्द्धन्नाजिघर्म्मि देवयजने पृथिव्या इडायास्पदमसि घृतवत् स्वाहा।
अस्मे रमस्वास्मे ते बन्धुस्त्वे रायो मे रायो मा वयꣳरायस्पोषेणवियौष्म तोतो रायः॥
(शु० य० ४।२२)

ब्राह्मीत्रिष्टुप् यथा—

षोडशी स्तोम ओजो द्रविणं चतुश्चत्वारिꣳशस्तोमो वर्चो द्रविणम्।
अग्नेः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः।
स्तोम पृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व॥ (शु० य० १।३५)

ब्राह्मीजगती यथा—

उद्दिवꣳस्तभानान्तरिक्षं पृणदृꣳहस्व पृथिव्यां द्युतानस्त्वा मारुतो मिनोतुमित्रावरुणौ।
ध्रुवेण धर्मणा।
ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि।
ब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजां दृꣳह॥(शुय० ५।२७)

की एक "ब्राह्मी गायत्री" होती है। इसी प्रकार याजुषी, साम्नी, और आर्ची, इन तीनों उष्णिक् छन्दोंको मिला देनेसे [४२] अक्षरोंकी एक ब्राह्मी उष्णिक्, याजुषी, साम्नी, और आर्ची अनुष्टुप्, इन तीनोंके मिलजानेसे [४८] अक्षरों का एक ब्राह्मी अनुष्टुप्, याजुषी, साम्नी, और आर्ची बृहती, इन तीनोंके मिल जानेसे [५४] अक्षरोंकी एक "ब्राह्मी बृहती" याजुषी, साम्नी और आर्ची पंक्ति के मिल जानेसे ६० अक्षरोंकी एक 'ब्राह्मी पंक्ति' याजुषी, साम्नी और आर्ची त्रिष्टुप्के मिल जानेसे ६६ अक्षरोंमें एक "ब्राह्मी त्रिष्टुप्" एवं याजुषी, साम्नी और आर्ची, इन तीन प्रकार जगती छन्दोंका मिला देनेसे ७२ अक्षरोंकी एक ब्राह्मी जगती होती है।

अब पूर्वोक्त मण्डल की अष्टम पंक्ति के प्रथम कोष्ठमें ब्राह्मी शब्द लिखकर उसी पंक्तिके द्वितीय कोष्ठमें [३६], तृतीय कोष्ठमें [४२], चतुर्थ कोष्ठमें [४८], पञ्चम कोष्ठमें [५४], षष्ठ कोष्ठ में [६०], सप्तम कोष्ठमें [६६] और अष्टम कोष्ठमें [७२] इन अङ्कों को बैठाना चाहिये।

## प्राग्यजुषामार्ष्य(१) इति ॥ १६ ॥

---

(१) इदानीं यथालब्धं आर्षीगायत्र्यादीना मुदाहरणानि प्रदर्श्यन्ते

तत्रार्षी गायत्री यथा—

(क) शं नो देवीरभीष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः ॥

(शु० य० ३६।१२)

(ख) आपो हिष्ठा मयो भुवस्तान ऊर्जे दधातन। महेरणाय चक्षसे ॥

(शु० य० ३६।१४)

आर्ष्युष्णिग् यथा—

(क) अग्ने वाजस्य गोमत ईशानः सहसो यहो। अस्मे धेहि जात वेदो महि श्रवः ॥

(शु० य० १५।३५)

(ख) त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्। यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषम् ॥

(शु० य० ३।६२)

आर्ष्यनुष्टुप् यथा—

(क)पुनन्तु मा देवजनाः पुनन्तु मनसा धियः। पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा।

(ख) ईशा वास्य मिदँ सर्वं यत्किंच जगत्यां जगत्।

तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्॥ (शु० य० ४०।१)

आर्षीबृहती यथा—

अत्र पितरो मादयध्वं यथा भागमा वृषायध्वम्। अमीमदन्त पितरो यथा भागमावृषायिषत॥

(शु० य० २।३१)

आर्षीपङ्क्तिर्यथा—

गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि। ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः॥ (शु० य० ३।४१)

आर्षीत्रिष्टुब् यथा—

तनूपा अग्नेऽसि तन्वं मे पाह्यायुर्दा अग्नेऽस्यायुर्मे देहि वर्चोदा अग्नेऽसि वर्चो मे देहि। अग्ने यन्मे तन्वा ऊनं तन्म आपृण॥ (शु० य० ३।१७)

आर्षीजगती यथा—

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः।

वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः॥ (शु०य०११।४)

इदन्त्वत्र बोध्यम्—बहवो मन्त्रावेदेषु दृश्यन्ते। ये खलु कात्यायनादिभिरुक्ताऽपि पिङ्गलाचार्य कृतगायत्र्यादिलक्षणैर्लक्ष्या न भवन्ति, ते तु वक्ष्यमाणनिचृत् भुरिग्–विराट्–स्वराट् रूपैः समाधेयाः। यथा स्वरित्यस्यैकाक्षरत्वेऽपि दैवीविराट्रूपेण नानुष्टुप् छन्दस्त्वं विरुद्धम्। यतो हि कात्यायनादिभिः सर्वानुक्रमणिकार, प्रातिशाख्यकारादिभिश्च तत्तन्मंत्रेषु दृष्ट्वाण्येव यानिच्छन्दांसि विहितानि तेषामेव यथाशास्त्रत्व प्रतिपादनार्थं पिङ्गलाचार्येण छन्दः शास्त्रमिदं प्रणीतं न तु तेषां बाधनार्थमिति। तथा ह्येकाक्षरादि च्छन्दसां शास्त्रविहितत्व प्रदर्शनपुरस्सरं भेदाः प्रदर्श्यन्ते।

| अक्षरा | गायत्री | विशेषनाम |
|---|---|---|
| १ | दैवी | ० |
| २ | ,, | भुरिक् |
| ३ | ,, | स्वराट् |
| ४ | याजुषी | विराट् |
| ५ | ,, | निचृत् |
| ६ | ,, | प्राजापत्या विराट् |
| ७ | ,, | भुरिक्,(१)प्राजापत्यानिचृत्२ |
| ८ | प्राजापत्या ० | याजुषी स्वराट् |
| ९ | ,, | भुरिक् |
| १० | ,, | स्वराट्,(१)साम्नी विराट्(२) |
| ११ | साम्नी | निचृत् |
| १२ | ,, | ० |

तिस्रस्तिस्र इत्यनुवर्तते। यजुषां पङ्क्तेः प्राक् प्राजापत्या आसुरी दैवीति यास्तिस्रो गायत्र्यः, ताः संगताः सत्यश्चतुर्विंशत्यक्षरा एका आर्षी गायत्री भवति। ता एव तिस्र उष्णिहः संगता अष्टाविंशत्यक्षरा एका आर्षी उष्णिक् संपद्यते। तिस्रोऽनुष्टुभः संगताद्वात्रिंशदक्षरा एका आर्षी अनुष्टुब् भवति। ता एव तिस्रो बृहत्यः संगताः षट्त्रिंशदक्षरा एका आर्षी बृहती भवति। ता एव तिस्रः पङ्क्तयः संगताश्चत्वारिंशदक्षरा एका आर्षी पङ्क्तिर्भवति। ता एव तिस्रस्त्रिष्टुभः संगताश्चतुश्चत्वारिंशदक्षरा एका आर्षी त्रिष्टुब् भवति। ता एव तिस्रो जगत्यः संगताः अष्टाचत्वारिंशदक्षरा एका आर्षी जगती भवति। अत्र प्रथमायां पङ्क्तौ प्रथमे कोष्ठे आर्षीशब्दं व्यवस्थाप्य द्वितीयादिषु क्रमेण चतुर्विंशत्याद्यङ्कान् विन्यसेत्। प्रथमपङ्क्तेर्द्वितीयादिकोष्ठेष्वङ्कानामुपरि गायत्र्यादीनि नामानि विन्यसेत्। अयं स्पष्टतरः प्रदर्शनोपायः—

तिस्र तिस्र इन पदों की अनुवृत्ति आती है। प्राजापत्या, आसुरी और दैवी-गायत्री, इन तीनों छन्दोंकी मिलानेसे [२४] अक्षरकी एक आर्षी गायत्री होती है। इसी प्रकार प्राजापत्या, आसुरी, और दैवी इन तीनों प्रकारके उष्णिक्

---

| अक्षरा | गायत्री | विशेषनाम | अक्षरा | गायत्री | विशेषनाम |
|---|---|---|---|---|---|
| १३ | ,, | भुरिक्(१) आसुरी विराट्(२) | २३ | ,, | निचृत् |
| १४ | ,, | स्वराट(१) आसुरी निचृत्(२) | २४ | ,, | ० |
| १५ | आसुरी | ० | २५ | ,, | भुरिक् |
| १६ | ,, | भुरिक्,(१) आर्ची विराट्[२] | २६ | ,, | स्वराट् |
| १७ | ,, | स्वराट्[१] आर्ची निचृत[२] | ३४ | ब्राह्मी | विराट् |
| १८ | आर्ची | ० | ३५ | ,, | निचृत् |
| १९ | ,, | भुरिक् | ३६ | ,, | ० |
| २० | ,, | स्वराट् | ३७ | ,, | भुरिक् |
| २१ | पादनिचृत् | ० | ३८ | ,, | स्वराट् |
| २२ | आर्षी | विराट् | | | |

उष्णिगादिच्छन्दसामप्यनया रीत्याक्षरसंख्योहनीया। एवमेवाथर्ववेदोक्तमन्त्रेष्वपि छन्दःसमाधानमूह्यम्।

छन्दोंके मिलानेसे [२८] अक्षरोंमें एक आर्षी उष्णिक्, प्राजापत्या, आसुरी, और दैवी अनुष्टुप्के मिलानेसे [३२] अक्षरोंका एक आर्षी अनुष्टुप् छन्द, प्राजापत्या, आसुरी और दैवी बृहती, इन तीन छन्दोंके मिल जानेमें [३६] अक्षरोंकी एक आर्षी बृहती, प्राजापत्या, आसुरी और दैवी पंक्तिके मिलनेसे [४०] अक्षरोंकी एक आर्षी पंक्ति, प्राजापत्या, दैवी, और आसुरी इन तीनों प्रकार त्रिष्टुप् छन्दों को मिला देने से [४४] अक्षरोंका एक आर्षी त्रिष्टुप् छन्द, एवं प्राजापत्या, आसुरी और दैवी जगती, इन तीनोंके मिल जानेसे [४८] अक्षरों को एक आर्षी जगती होती है।

( श्रीहलायुधभट्टविरचितं चतुःषष्टिकोष्ठात्मकं मण्डलम् )

| | छन्दः | गायत्री | उष्णिग् | अनुष्टुब | बृहती | पङ्क्तिः | त्रिष्टुब् | जगती | अक्षाना वृद्धिक्षय क्रम |
|---|---|---|---|---|---|---|---|---|---|
| १ | आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ | ४ वृद्धिः |
| २ | दैवी | १ | २ | ३ | ४ | ५ | ६ | ७ | १ वृद्धिः |
| ३ | आसुरी | १५ | १४ | १३ | १२ | ११ | १० | ९ | १ ह्रासः |
| ४ | प्राजापत्या | ८ | १२ | १६ | २० | २४ | २८ | ३२ | ४ वृद्धिः |
| ५ | याजुषी | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ वृद्धिः |
| ६ | साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ | २ वृद्धिः |
| ७ | आर्ची | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ | ३ वृद्धिः |
| ८ | ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ | ६ वृद्धिः* |

इति भट्टहलायुधकृतायां छन्दोवृत्तौ द्वितीयोऽध्यायः ॥

पूर्वोक्त मण्डलकी पङ्क्तिके प्रथम कोष्ठमें आर्षी शब्द लिखकर, द्वितीय कोष्ठमें [२४], तृतीय कोष्ठमें [२८], चतुर्थ कोष्ठ में [३२], पञ्चम कोष्ठमें [३६], षष्ठ कोष्ठमें [४०], सप्तम कोष्ठ में [४४], और अष्टम कोष्ठमें [४८], अङ्क बैठाना चाहिये और द्वितीय कोष्ठके ऊपर गायत्री, तृतीय कोष्ठके ऊपर उष्णिक्, चतुर्थ कोष्ठके ऊपर अनुष्टुप्, पञ्चम कोष्ठके ऊपर बृहती, षष्ठ कोष्ठके ऊपर पङ्क्ति, सप्तम कोष्ठके ऊपर त्रिष्टुप् और अष्टम कोष्ठके ऊपर जगती, इस प्रकार सातों छन्दका नाम लिख देना चाहिये।

वृत्तिकार हर एक सूत्रमें छन्दोंके भेद भली भांति समझनेके लिये किस पंक्तिके किस प्रकोष्ठमें कितने अङ्क बैठाने चाहिये यह दिखलाते आये हैं। अब उन सबको मिला देनेसे एक पूर्ण मण्डल बन जाता है। जिसे ऊपर दिखाया गया है। यही मण्डल ही समस्त वैदिक छन्दोंके भेदोंको जाननेका एक सर्वोत्तम उपाय है।

इति सान्यालोपाह्व श्री अयोध्यानाथशास्त्रिविरचितायां कादम्बिन्याख्य भाषाटीकायां द्वितीयोऽध्यायः।

---

# अथ तृतीयोऽध्यायः।

## पादः ॥ १ ॥

**अधिकारोऽयमाध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामस्तत् 'पादः' इत्यधिकृतं वेदितव्यम्। वक्ष्यति च—'गायत्र्या वसवः' (पि० सू० ३।३) इति ॥ १ ॥**

कादम्बिनी।

तृतीय अध्यायकी समाप्ति पर्यन्त 'पाद' शब्दका अधिकार रहेगा। अर्थात् इसके आगे जो कुछ कहा जायगा वह 'पाद' के विषयमें ही कहा जायगा। द्वितीय अध्यायमें गायत्र्यादि छन्दोंमें कितने अक्षर होते हैं और अक्षरोंके भेदसे गायत्री आदि छन्दोंके कितने भेद होते हैं इसका विचार किया गया; परन्तु किस छन्दमें कितने पाद होते हैं इसका विचार नहीं किया गया है। इस अध्यायमें गायत्री आदि सातों छन्दोंमें किसके कितने पाद होते हैं और उन पादोंके भेद होनेसे गायत्री आदि छन्दोंके भी भेद हो जाते हैं इसका विवेचन किया जायगा।

परन्तु पाद शब्दके अधिकारसे केवल सूत्रार्थ करनेमें सहायता होती है। जैसे ( गायत्र्या वसवः'' ) यह इस अध्यायका तीसरासूत्र है—इसमें पाद शब्दकी उपस्थिति होनेसे जहां पर गायत्रीके पाद शब्दसे कहा जायगा वहां पर वसु अर्थात् आठ संख्याका बोध होता है ॥१॥

## इयादिपूरणः ॥ २ ॥

'पादः' इत्यनुवर्तते। इयादिः पूरणो यस्य स इयादिपूरणः। आदिशब्देन उवा(*)दयोऽपि गृह्यन्ते। तत्रायमर्थः-यत्र गायत्र्यादिच्छन्दसि,

---

(*) 'उवादय' इत्यादिशब्देन यण्संयोगसवर्णदीर्घगुणवृद्धिव्यूहादयो गृह्यन्ते। तथा च शौनकः—

व्यूहेदेकाक्षरीभावान् पादेषूनेषुसम्पदे: क्षैप्रवर्णांश्च संयोगान् व्यपेयात्सदृशैः स्वरैः॥' इति (ऋ० पा० १७।२३। )

सर्वानुक्रमणिकाकारोऽपि

'पादपूरणार्थन्तु क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेत्' ( १।३ )

अत्रैतद्भाष्यकारश्च 'क्षैप्रसंयोगो यकारवकार संयोगः, यण् संयोग इत्यन्ये, । कुतएतत् यण् हि चिप्रं भवति इति क्षैप्रः। दध्यत्रेत्यादावेकमात्रामर्धमात्रां करोतीति । 'एकः पूर्वपूरयोः (पा० सू० ६।१।८४) इत्यविकारसम्पन्नःसंधिरेकाक्षरीभावः। तद्वद्देऽक्षरे एकाक्षरीक्रियेते इति। तत्र यण्व्यहोयथा—( यण्पदेन यरलवा गृह्यन्ते )

'दिवस्पृथिव्याः पर्योज उद्भृतम्' ( ऋ० सं० ४।७।३५२ )

'नि नो होता वरेण्यः' ( ऋ० सं० १।२।२०।२ )

इत्यादौ 'परियोजः' वरेणियः' इति यकारं व्यूहेत

'एवा त्वामिन्द्र वज्रिन्' ( ऋ० सं० ३।६।२।१। )

इत्यादौ 'वजरिन' इति रकारं व्यूहेत्।

सवर्णदीर्घव्यूहो यथा—

'अद्याद्याश्वश्व' ( ऋ० सं० ६।४।३९।२ )

इत्यादावद्य अद्य इति सवर्णदीर्घं व्यूहेत।

गुणव्यूहो यथा—

उपेन्द्र तव वीर्ये ( ऋ० स० ५।४।६।१ )

इत्यादौ 'उप इन्द्र' इति विगृह्य पठेत

**पादस्याक्षरसंख्या न पूर्यते, तत्रेयादिभिः पूरयितव्या। यथा-'तत्स- वितुर्वरेणियम्' ( ऋ० सं० ३।४।१०।५ ), 'दिवं गच्छ सुवः पत' ( यजु० १२।४ ) इत्यादयः ॥ २ ॥**

पाद शब्दका अधिकार आ रहा है। 'इयादिपूरणः'का अर्थ है कि (इयादि शब्द पूर्ण करने वाला शब्द है जिस पाद का। आदि शब्द से उव्, पूर्वसवर्ण् आदि का भी ग्रहण समझना। अर्थात् गायत्री आदि छन्दोंके किसी पादमें यदि अक्षर संख्या कम हो तो उस न्यून अक्षरोंकी पूर्ति इय्, उव आदि पदोंसे करना चाहिये। जैसे आर्षी गायत्रीके प्रथम पादमें आठ अक्षर होते हैं। परन्तु ( तत्सवितुर्वरे- ण्यम् ) गायत्रीके इस पादमें सात ही अक्षर देख पड़ते हैं। इसलिये (तत्सवितु वरेणियम् ) ऐसा पाठ करना चाहिये। इससे गायत्रीके इस पादमें आठ अक्षर हो जाते हैं।

## गायत्र्या वसवः ॥ ३ ॥

**'पादः इत्यनुवर्तते। परिभाषेयम्। गाय(*)त्र्याः पादो वसवोऽष्टा- क्षराणि भवन्ति। यत्र गायत्र्याः पादोऽभिधास्यते तत्राष्टाक्षरो ग्राह्यः**

'पादः' सूत्रसे पाद पदकी अनुवृत्ति आती है। यह परिभाषा सूत्र है। गायत्री का पाद आठ अक्षरोंका होता है इसलिये जहाँ कहीं गायत्रीके पाद शब्दसे व्यवहार किया जायगा वहां पर आठ अक्षरोंका बोध होता है। इस सूत्र में गायत्री शब्दसे आर्षी गायत्रीका ही ग्रहण करना चाहिये क्योंकि ब्राह्मी

---

वृद्धिव्यूहो यथा—

'प्र ब्रह्मै तु सदनादृतस्य' ( ऋ० मं० ५।४।१।१ )

इत्यादौ 'ब्रह्म एतु' इति विगृह्य पठेत्।

पूर्वसवर्णव्यूहो यथा—

'इन्द्र वाजेषु नोऽव' ( ऋ० सं० १।१।१३।४ )

इत्यादौ 'नो अव' इति विगृह्य पठेत्।

(*) अत्रेदमवधेयं. यद्यपि दैव्यादि गायत्रीषु न्यूनाधिकसंख्याः सन्ति तथापि निरूपाधिकगायत्री शब्देनार्षीगायत्री एव गृह्यते। "गायत्री सा चतुर्विंशत्यक्षरा अष्टाक्षरास्त्रयः पादाः।" इति ऋक्प्रतिशाख्ये ( ११।१६ ) दर्शनात्। वस्तुतस्तु गुणवृध्यादितत्रातरीयसंज्ञा इव गायत्री पादत्वादीनामपि स्वशास्त्रीयसंकेतविषयत्वावच्छेदकं तेन जगती पादादीनां द्वादशाक्षरत्वादिना क्वचिदप्रसिद्धावपि न क्षतिः।

गायत्री आदिका पाद नव अक्षरोंका भी होता है। ऋक्-प्रातिशाख्य आदि ग्रन्थों में गायत्री शब्दसे आर्षी गायत्रीका ही व्यवहार देखा जाता है ॥३॥

## जगत्या आदित्याः ॥ ४ ॥

**'पादः' इत्यनुवर्त्तते। जगत्याः पादो द्वादशाक्षरो भवति। यत्र क्वचिज्जागतः पादस्तत्र द्वादशाक्षरो गृह्यते ॥४॥**

"पादः" सूत्रमें पाद पदकी अनुवृत्ति आती है। यह परिभाषा सूत्र है। जगतीका पाद द्वादश अक्षरका होता है। जहां कहीं जगतीका पाद कहा जाय वहां बारह अक्षर समझना चाहिये ॥४॥

## विराजो दिशः ॥ ५ ॥

**'पादः' इत्यनुवर्तते। यत्र क्वचिद्वैराजः पाद इत्युच्यते, तत्र दशाक्षरः प्रत्येतव्यः ॥ ५ ॥**

(पादः) इस पदकी अनुवृत्ति आती है। जहां कहीं विराट् का पाद ऐसा कहा जाय वहां दस अक्षर समझना चाहिये ॥ ५ ॥

## त्रिष्टुभो रुद्राः ॥ ६ ॥

**त्रैष्टुभः 'पादः' इत्युक्ते सर्वत्रैकादशाक्षरो गृह्यते। अस्मिन्नेवाध्याये परिभाषा एताश्चतस्रः ॥ ६ ॥**

जहां कहीं 'त्रिष्टुभका पाद' ऐसा व्यवहार किया वहां ग्यारह अक्षर समझना। केवल इसी अध्यायमें ही इन चार परिभाषायोंका प्रयोग किया जायगा ( अन्यत्र नहीं ) ॥६॥

## एकद्वित्रिचतुष्पादुक्तपादम् ॥ ७ ॥

**एभिश्चतुर्भिर्लक्षणैरुक्तः पादो यस्य तत् 'उक्तपादं' छन्दः। यस्य च्छन्दसो यादृशः पादः परिभाषितस्तच्छन्दस्तेनैव पादेन क्वचिदेकपात्, क्वचिद्द्विपात्, क्वचित्त्रिपात्, क्वचिच्चतुष्पाद् भवति। गायत्री च त्रिपदैव(*)। चतुर्भिरष्टाक्षरैः पादैरनुष्टु(†)बेव स्यात् ॥७॥**

---

(*) वैदिकच्छन्दोमन्त्रविषयकमिदं, लौकिकं तु 'पादश्चतुर्थभागः'। ( पिं० सू० ३।१० ) इति विशेषस्य वक्ष्यमाणत्वात्। 'छन्दः एकादिपादकम्'। ( १३०।२ ) इत्यादिनिये 'पञ्च रक्तः षट्' इति सांख्यायन सूत्रे (७।२७)।

(†) उपलक्षणमेतत् द्वादशाक्षरपादादीनामपि।

पूर्वोक्त चार सूत्रोंसे जिन छन्दोंमें जैसा पाद कहा गया हो वह छन्द उसी पादसे कहीं एक पाद, कहीं द्विपाद, कहीं त्रिपाद और कहीं चतुष्पाद होता है परन्तु गायत्री त्रिपाद ही होती है; क्योंकि आठ अक्षरोंसे युक्त चार पद जिस छन्दमें हों उसे अनुष्टुप् ही कहते हैं ॥७॥

## आद्यं(*) चतुष्पादृतुभिः ॥ ८ ॥

'ऋतु' शब्देन लक्षणया षडक्षरः पादोऽभिधीयते। तैः पादैश्चतुष्पादं गायत्रं छन्दो भवति। एवं चतुर्विंशत्यक्षराणि संपद्यन्ते। यथा—

'दोषो गाय बृहद् (१) गाय द्युमद्धेहि (२)।
आथर्वण स्तुहि (३) देवं सवितारम् (४) ॥'
( अथर्ववेदे-कां० ६ सू० १ मं० ) ॥ ८ ॥

ऋतु शब्दकी छः अक्षरों से युक्त पादमें लक्षणा है। अर्थात् जिसके हरएक पादमें छः छः अक्षर हों ऐसे चार पादोंसे युक्त भी गायत्री छन्द होता है। जैसे अथर्ववेदके उक्त उदाहरणमें (२४) अक्षरोंके चार पाद देखे जाते हैं ॥८॥

## क्वचित्त्रिपाद्दृषिभिः ॥ ९ ॥

क्वचिद्वेदे सप्ताक्षरोपलक्षितैः पादैस्त्रिभिर्गायत्र्येव भवति। एवमेकविंशत्यक्षराणि जायन्ते। यथा—

'युवाकु हि शचीनां (१) युवाकु सुमतिनाम् (२)।
भूयाम वाजदाव्नाम् (३) ॥'
( ऋग्वेदे-अ० १ अ० १ व० ३२ मं० ) ॥ ९ ॥

जिसके प्रत्येक पादमें सात अक्षर हों इस प्रकार तीन पादोंसे युक्त इक्कीस अक्षरोंका भी गायत्री छन्द किसी वेदमें देखा जाता है। कहीं पर वेदमें सात अक्षरोंसे युक्त तीन पाद वाले छन्दकी गायत्री संज्ञा ही होती है। इसी प्रकार इक्कीस अक्षरोंका भी गायत्री छन्द होता है ॥९॥

---

(*) आद्यमिति- अस्मिन्नध्यायेऽनुक्रान्तेषु प्रथमम्। सकलच्छन्दसामादिभूतश्च। 'गायत्री प्रथमा छन्दसाम्' इति शतपथश्रुतेः। गीतासु च स्वयं भगवता 'गायत्री छन्दसामहम्' (१०।३५) इत्युक्तत्वात् प्रधानभूतश्चेति षड्गुरुशिष्यः॥

ईदृशस्य गायत्रीछन्दसो वेदेषु प्रायोऽदर्शनात्, उत्तरत्र लक्षितस्य सप्ताक्षरपादत्रयोपेतस्य सर्वत्रैव बाहुल्येनोपलम्भात्। गायत्र्यास्त्रिपादत्वस्यैव प्रसिद्धेश्च 'आद्यं चतुष्पादृतुभिः क्वचित्' इति सूत्रपाठ एव युक्तः। 'लक्ष्यानुसारि हि लक्षणं भवति' इति न्यायात्।

## सा पादनिचृत् ॥ १० ॥

सैव(*)गायत्री पादनिचृत्' इति संज्ञां लभते। प्रयोक्तुरदृष्टाभ्युदय-संबन्धज्ञापनार्थमियं संज्ञा वेदस्यानादित्वान्महत्त्वेऽपि च न दुष्टेति ॥१०॥

उसी सात अक्षरोंकी त्रिपदा गायत्रीको 'पादनिचृत्' कहते हैं। इसके प्रयोग करनेवालेको शुभ अदृष्ट उत्पन्न होता है। इसी बातको सूचित करनेके लिये ही ऐसी संज्ञा की गयी है। चृत्का अर्थ हिंसा करना हैं और नि उपसर्ग लग जानेसे उसका विपरीत अर्थ हिंसा न करना है। अर्थात् जिस छन्दके प्रयोग करनेसे यज्ञमानका किसी प्रकार भी हनन न हो। वह शुभ अदृष्ट से ही हो सकता है। यही भाव इस प्रकार संज्ञा करने का है ॥१०॥

## षट्कसप्तकयोर्मध्येऽष्टावतिपादनिचृत् ॥११॥

प्रथमः षडक्षरः, द्वितीयोऽष्टाक्षरः, तृतीयः सप्ताक्षरः। एवं त्रिभिः पादैर्या गायत्री सा 'अतिपादनिचृत्' इति संज्ञा लभते। 'त्रिपात्' इत्यनुवर्तनीयम्। यथा—

'प्रेष्ठं वो अतिथिं (१) स्तुषे मित्रमिव प्रियम् (२)।
अग्निं रथं न वेद्यम् (३) ॥'

( ऋग्वेदे-अ० ६ अ० ६ व० ५ मं० १ ) ॥११॥

जिस गायत्री छन्दके प्रथमपादमे छः अक्षर, द्वितीय पाद में आठ अक्षर, और तृतीय पाद में सात अक्षर हों उसे 'अतिपादनिचृत्' कहते हैं।

## द्वौ नवकौ षट्कश्च नागी ॥ १२ ॥

द्वौ नवाक्षरौ पादौ, षडक्षरस्तृतीयः। एवं त्रिभिः पादैः 'नागी' नाम गायत्री भवति। यथा—

(*) तथा च कात्यायनः-"यः सप्तकाः पादनिचृत् शौनकेनाप्युक्तं, ऋक्प्रातिशाख्ये (१६।१८)—

युवाकु हीति गायत्री त्रयः सप्ताक्षराविराट्।
सैषा पादनिचृन्नाम गायत्र्यैवैकविंशिका ॥

यजुर्वेदेऽप्ययं दृश्यते।

अभी षु णः सखीनाम् (१) अविताजरितॄणाम्। (२)
शतं भवास्यूतये (३) ( शु० य० २७।४१ )

'अग्ने तमद्याश्वं न स्तोमैः (१) क्रतुं न भद्रं हृदिस्पृशम् (२)।
ऋद्ध्यामा त ओहैः (३) ॥'

( ऋग्वेदे-अ० ३ अ० ५ व० १० मं० १ ) ॥१२॥

जिस गायत्री छन्दके प्रथम दो पादोंमें नौ अक्षर और तृतीयपादमें छः अक्षर हों उस त्रिपदा गायत्री को 'नागी' कहते हैं ॥ १२ ॥

## विपरीता वाराही ॥ १३ ॥

**इयमेव नागी गायत्री विपरीता यदा भवति, तदा 'वाराही' नाम भवति। प्रथमः पादः षडक्षरः द्वितीयतृतीयौ नवाक्षरौ। यथा—**

**'वीतँ स्तुके स्तुके (१) युवमस्मासु नियच्छतम् (२)।**
**'प्र(*) प्र यज्ञपतिं तिर (३)।'**

**( तै० आ० प्रपा० ३ अ० ११ मं० २० ) ॥१३॥**

यही नागी गायत्री यदि विपरीत हो जाय; अर्थात् प्रथम पादमें छः द्वितीय और तृतीय पादमें यदि नौ अक्षर हों तो उसे वाराही गायत्री' कहते हैं।

## षट्(†)कसप्तकाष्टकैर्वर्धमाना ॥ १४ ॥

**षडक्षरः प्रथमः पादः, द्वितीयः सप्ताक्षरः, तृतीयोऽष्टाक्षरः। एवं त्रिभिः पादैः 'वर्धमाना' गायत्री भवति। यथा—**

**'त्वमग्ने यज्ञानां (१) होता विश्वेषां हितः (२)।**
**देवेभिर्मानुषे जने (३) ॥'**

**( ऋग्वेदे-अ० ४ अ० ५ व० २२ मं० १ ) ॥१४॥**

जिस गायत्री छन्दके प्रथम पादमें छः अक्षर द्वितीय पादमें सात अक्षर, और तृतीय पादमें अष्टाक्षर हों उसे वर्धमाना 'गयात्री' कहते हैं ॥ १४ ॥

---

(*) प्र इति व्यूहान्नवाक्षरत्वम्। उदाहरणान्तरं मृग्यम्।

(†) उदारणान्तरमपि यजुर्वेदे यथा—

कया त्वं न ऊत्या (१) भि प्र मन्दसे वृषन् (२) कया स्तोतृभ्य आ भर। (३) ( शु० य० ३६।७।) प्रातिशाख्ये वर्धमानाया भेदान्तरमपि दृश्यते 'अष्टकौ मध्याःषट्क एकेषामुपदिश्यते।' (१४।२२) इति उदाहरणन्तु—निषसाद धृतव्रतो (१) वरुणः पस्त्या स्वा। (२) साम्राज्याय सुक्रतुः (३) (ऋ० सं० अ० १ अ० २ व० १७ मं० ६) तृतीयो व्यूहेनाष्टाक्षरः।

## विपरीता प्रतिष्ठा ॥ १५ ॥

सैव वर्धमाना गायत्री विपरीता यदा भवति, तदा 'प्रतिष्ठा' नाम गायत्री भवति। अष्टाक्षरः प्रथमः पादः, द्वितीयः सप्ताक्षरः, षडक्षरस्तृतीयः। यथा—

'आपः पृणीत भेषजं (१) वरूथं तन्वे ३ मम (२)।
ज्योक्च सूर्यं दृशे (३) ॥'

( ऋग्वेदे-अ० १ अ० २ व० १२ मं० १ ) ॥१५॥

वही वर्धमाना गायत्री यदि विपरीत हो। अर्थात् जिसके प्रथम पादमें आठ द्वितीय पादमें सात और तृतीय पादमें छः अक्षर हों उसे 'प्रतिष्ठा' गायत्री कहते हैं।

## तृतीयं द्विपाज्जागतगायत्राभ्याम्(*) ॥ १६ ॥

तृतीयशब्देनैतदध्यायस्थसूत्रपाठक्रमापेक्षया विराजमाह। तथा चोक्तम्—विराजो दिशः' ( पि० सू० ३।५ ) इति। यदा द्वादशाक्षरोऽष्टाक्षरश्च पादः स्यात् ततस्ताभ्यां 'द्विपाद् विराड्' नाम गायत्री भवति। यथा—

'नृभिर्येमानो हर्यतो विचक्षणो (१) राजा देवः समुद्रियः (२) ॥'

( ऋग्वेदे-अ० ७ अ० ५ व० १५ मं० १ ) ॥ १६ ॥

कादम्बिनी।

तृतीय शब्दसे यहां पर तृतीय अध्यायस्थसूत्रके पाठ क्रमकी अपेक्षासे विराट् का ग्रहण करना चाहिये 'विराजो दिशः' ( पि० सू० ३।५ ) इस सूत्रसे दश अक्षरकी 'विराट' संज्ञा कही गयी है।

जिस गायत्रीके एक पादमें (१२) अक्षर और एक पादमें (८) अक्षर हों उसे 'द्विपाद् विराट्' नामकी गायत्री कहते हैं।

---

(*) अत्रक्रमोऽविवक्षितः। जागतग्रहणं त्रैष्टुभस्याप्युपलक्षणकम्। तेन—

'वसुरग्निर्वसुश्रवा (१) अच्छानक्षिद्युमत्तमं रयिंदाः (२)

( ऋ० सं० अ० ४ अ० १ व० १६ मं० २ )

इत्यादीनामपि सङ्ग्रहः। यद्यपि भूम्ना विराडाख्यं स्वतन्त्रमेवच्छन्दः श्रूयते। तथापि लाघवार्थमस्य भेदानां तत्र तत्रान्तर्भावः सप्तछन्दोवादावष्टम्भे न विहित इति बोध्यम्।

## त्रिपात्त्रैष्टुभैः ॥ १७ ॥

'तृतीयम्' इत्यनुवर्तते। एकादशाक्षरैः पादैः 'त्रिपाद् विराड्' नाम गायत्री (*)भवति। यथा—

'दुहीयन्मित्रधितये युवाकु (१) राये च नो मिमीतं वाजवत्यै(२)। इषे च नो मिमीतं धेनुमत्यै (३) ॥'

( ऋग्वेदे-अ० १ अ० ८ व० २३ मं० ४ ) ॥ १७ ॥

तृतीय शब्दकी अनुवृत्ति इस सूत्रमें भी आती हैं। तृतीय शब्दसे विराट् का ग्रहण होता है यह कहा गया हैं। और त्रिष्टुभ शब्दमें ग्यारहका ग्रहण होता है। 'त्रिष्टुभो रुद्राः' (३।६)

इसलिये सूत्रार्थ यह हुआ कि जिस गायत्री छन्दको ग्यारह ग्यारह अक्षर तीनों पादोंमें होते हों उसे त्रिपाद् विराड् नामकी गायत्री कहते हैं ॥ १७ ॥

## उष्णि(†)ग्गायत्रौ जागतश्च ॥ १८ ॥

यत्र गायत्रावष्टाक्षरौ पादौ, जागतश्च द्वादशाक्षरः, एवं त्रिभिः

---

(*) शौनककात्यायनाभ्यां त्विदमनुष्टुब्भेदेषु परिगणितम् )

तृतीयाध्यायगायत्र्या भेदाः सङ्क्षेपतः प्रदर्श्यन्ते।

(१) आर्षीगायत्री ( ८, ८, ८,=२४ )
(२) पाद निचृत् गायत्री—( ७, ७, ७=२१ )
(३) अतिपाद निचृत् गायत्री—( ६, ८, ७=२१ )
(४) नागीगायत्री—( ९, ९, ६=२४ )
(५) वाराही गायत्री—( ६, ९, ९=२४ )
(६) वर्धमानागायत्री—( ६, ७ ८=२१ )
(७) प्रतिष्ठा गायत्री—( ८, ७, ६=२१ )
(८) द्विपाद् विराट्गायत्री—( १२, ८=२० ) द्विपाद्
(९) त्रिपाद् विराट गायत्री—( ११, ११, ११=३३ )

अथमत्र संग्रहः

आर्षी पाद निचृन्नागी ह्यतिपादनिचृत्तथा। वाराही च प्रतिष्ठा च वर्धमाना द्विपाद्विराट् ॥१॥ ततस्त्रिपाद् विराट् चैव भुक्तिमुक्ति प्रदायिनी। महद्भिर्वेदविद्प्राज्ञै गायत्र्यो न वधा स्मृताः ॥२॥

(†) उष्णिक् शब्द निर्वचनमाह निरुक्ते (७।१२)। उष्णिक् उत्स्नाता भवति।' गायत्रीतृचतुर्भिरक्षरैरधिकैरूर्द्ध्वे ष्टिता इव। 'स्निह्यतेर्वास्यात्कान्ति कर्मणः'। उदधिकं स्निग्ध हि देवानामिति तदर्थः। 'उष्णिषिणी वा इत्यौपमिकम्'। उपमानिबन्धनमुष्णीषवतीव भवति। चत्वार्यक्षराण्यन्यस्या गायत्रीतोऽधिकान्युष्णीषमिवलक्ष्यन्ते तेनेयमुष्णिक्।

पादैः 'उष्णिग्' नाम छन्दो भवति । अत्र च क्रमो न विवक्षितः । पादसंख्यामात्रं विधीयते ॥ १८ ॥

जिस छन्दके दो पाद आठ अक्षरके और एक पाद बारह अक्षरका हो उस त्रिपाद छन्दको उष्णिक् कहते हैं। इस छन्दमें किन पादोंमें आठ अक्षर हों और किन पादोंमें बारह अक्षर हों यह नियमित नहीं है। नियम है केवल आठ और बारह अक्षर वाले तीन पाद मात्रका ॥ १८ ॥

## क(*)कुम्मध्ये चेदन्त्यः ॥ १९ ॥

गायत्रयोः पादयोर्मध्ये जागतश्चेत्पादो भवति, तदेयम् उष्णिक् 'ककुप' सञ्ज्ञां लभते । यथा

'युष्माकं स्मा रथां' अनु (१) मुदे दधे मरुतो जीरदानवः (२) । वृष्टीद्यावो यतीरिव (३) ॥'

( ऋग्वेदे-अ० ४ अ० ३ व० ११ मं० ५ ) ॥ १६ ॥

पूर्व सूत्रमें जो अन्त कहा गया है वही यदि मध्यमें हो। जैसे-पूर्व सूत्रमें जागत शब्दका उल्लेख अन्तमें है और जागत शब्दसे पूर्वपरिभाषाके अनुसार बारह अक्षरोंका ग्रहण होता है । इसलिये सूत्रार्थ यह हुआ कि जिस छन्दका

---

(*) ककुभो निर्वचनमित्थं निरूक्ते (७।१८) 'ककुप् ककुभिनी भवति' सैवोष्णिक् जागतेनपादे नोपहतेन मध्यतः कुकुबित्युच्यते । सतस्यामध्यतः कुबुबिव भवति । ककुभिनीव ककुप् । तथा च कुकुब् । वत्वाच्छन्दोऽपि ककुप् । ककुबिति पृष्ठे समुन्नतः प्रदेशः, यच्च कुब्जस्येव भवति । 'ककुप् कुब्जश्च–कुजतेर्वा उब्जतेर्वा' । कौटिल्यार्थकस्य कुजतेः ककुप् रूपं भवति । तेन हि वक्रतामावद्यते । ३। अप्सु अन्तः इति न्यूहात्पादपूर्तिः ।

अथ संक्षेपत, उष्णिग्भेदाः प्रदर्श्यन्ते

ककुप् ( ८ । १२ । ८ ) ॥ १ ॥
पुरउष्णिक् ( १२ । ८ । ८ ) ॥ २ ॥
परोष्णिक् ( ८ । ८ । १२ ) ॥ ३ ॥
चतुष्पाद् ( ७ । ७ । ७ । ७ )

अयमत्रसङ्ग्रहः।

पुर उष्णिक् परोष्णिक् च चतुष्पाद्य ककुब्तथा । महर्षिपिङ्गलाचार्यैं चतस्र उष्णिहः स्मृताः॥ १ ॥
आद्यन्तमध्यगायासां पादाभवन्ति जागताः । गायत्र्यथान्यपादेषु त्रिपाद उष्णिहः श्रुताः ॥ २ ॥
ततश्च चरणैर्वेदैर्चतुष्पाच्च' चतुः पदा । चतुर्षुचापिवेदेषु चरत्येकाकिनी पृथक् ॥ ३ ॥

प्रथम और अन्तका पाद आठ अक्षरोंका हो और बीचका पाद यदि बारह अक्षरोंका हो तो उस उष्णिक् छन्दकी 'ककुप्' संज्ञा होती है ।

## पुरउष्णिकपुरः ॥ २० ॥

स एव पादो जागतश्चेत् प्रथमो भवति, गायत्री च परतः, तदा 'पुरउष्णिक्' नाम भवति । यथा—

"अप्स्वन्तरमृतमप्सु भेषज (१) मपामुत प्रशस्तये (२)। देवा भवत वाजिनः (३) ॥"

( ऋग्वेदे-अ० १ अ० २ व० ११ मं० ४ ) ॥ २० ॥

जिस छन्दके पहिले पादमें बारह अक्षर, और शेष दो पाद आठ आठ अक्षर के हों उसे 'पुरउष्णिक्' कहते हैं ॥ २० ॥

## परोष्णिक् परः ॥ २१ ॥

एवं जागतः पादः परतश्चेद्भवति, पूर्वौ च गायत्रौ, तदा 'परोष्णिक्' नाम छन्दो भवति ।

'उष्णिग्गायत्री जागतश्च' (पि० सू० ३।१८) इत्यनेन गतार्थमेतत्। विशेषसंज्ञाभिधानार्थं पुनरुच्यते । प्रथमसूत्रे (पि० सू० ३।२०) उष्णिग्ग्रहणमधिकारार्थम् ।

यथा—

'अग्ने वाजस्य गोमत (१) ईशानः सहसो यहो (२) ।
अस्मेधेहि जातवेदो महि श्रवः (३) ॥'

(ऋग्वेदे-म० १ अ० ५ व० २७ मं० ४ ) ॥ २१ ॥

जिस छन्दका अन्तिम पाद बारह अक्षरोंका हो और आदिके दो पाद आठ अक्षरोंके हों उसे 'परोष्णिक' कहते हैं ।

## चातुष्पाद्दर्षिभिः ॥ २२ ॥

सप्ताक्षरैश्चतुर्भिः पादैः 'उष्णिक्' एव भवति । यथा—

'नदं व ओदतीनां (१) नदं यो युवतीनाम् (२) ।
पतिं वो 'अघ्न्यानां (३) धेनूनामिषुध्यसि (४) ॥'

( ऋग्वेदे-म० ६ अ० ५ व० ५ मं० २ ॥ २२ ॥

जिस छन्दके प्रत्येक पादमें सात अक्षर हों और चार पाद हों, उस चतुष्पाद छन्द को भी 'उष्णिक्' कहते हैं ॥ २२ ॥

## अनुष्टुब्गायत्रैः ॥ २३ ॥

'चतुष्पाद्' इत्यनुवर्तते। गायत्रैरष्टाक्षरैः पादैश्चतुष्पाच्छन्दः "अनुष्टुप्" संज्ञं भवति। यथा—

"सहस्रशीर्षा पुरुषः (१) सहस्राक्षः सहस्रपात्।
स भूमिं विश्वतो वृत्वा (३) त्यतिष्ठद्दशाङ्गुलम् (४) ॥"

( ऋग्वेदे-अ० ८ अ० ४ व० १७ मं० १ ) ॥ २३ ॥

पूर्व सूत्रसे 'चतुष्पाद' शब्द की अनुवृत्ति आती है। जिस छन्दमें गायत्री के चार पाद हों। अर्थात् जिस छन्दके चार पाद हों और प्रत्येक पादमें आठ आठ अक्षर हों उसे अनुष्टुप् कहते हैं। आर्षी गायत्रीमें आठ आठ अक्षरों के तीन पाद होते हैं और अनुष्टुप्में आठ आठ अक्षरोंके चार पाद होते हैं। यही आर्षी गायत्री और अनुष्टुप् में अन्तर है ॥ २३ ॥

## त्रिपात्क्वचिज्जागताभ्यां च ॥ २४ ॥

'अनुष्टुब्' इत्यनुवर्तते। चकाराद् गायत्रग्रहणं च। गायत्रेणैकेन पादेन, ततो द्वाभ्यां जागताभ्यां क्वचित् 'त्रिपादनुष्टुब्' भवति ॥२४॥

'अनुष्टुप्' शब्द की अनुवृत्ति पूर्व सूत्रसे आती है। इस सूत्रमें 'च' ग्रहण है इससे 'गायत्र' पदकी भी अनुवृत्ति आती है। यदि एक पाद गायत्रीका हो शेष दो पाद जगतीके हों ( अर्थात् एक पादमें आठ अक्षर और दो पादों मे बारह बारह अक्षर हों ) तो उस त्रिपाद छन्द को भी अनुष्टुप् कहते हैं।

कौन पाद गायत्रीका हो और कौन पाद जगतीका हो यह क्रम अगले सूत्रमें कहा जायगा ॥ २४ ॥

## मध्येऽन्ते च ॥ २५ ॥

जागतयोः पादयोर्मध्येऽन्ते च यदा गायत्रः पादो भवति, तदाप्यनुष्टुबेव स्यात्। यथा—

'पर्यूषु'प्र ध(*)न्व वाजसातये (१) परिवृत्राणि सक्षणिः (२)। द्विषस्तर(†)ध्या ऋणया न ईयसे (३) ॥'

( ऋग्वेदे-अ० ७ अ० ५ व० २२ मं० १ )

---

(*) (†) 'प्रधनुव "आविया" इत्युवियशब्दाभ्यां पादपूर्त्तिः।

अन्तपश्च उदाहरणम्—

'मा कर्म भ्रातमस्य(*)मित्रिणे नो (१) माकुत्रा नो गृहेभ्यो धेनवो गुः(२) । स्तनाभुजो(†) अशिश्वीः (३) ॥'

( ऋग्वेदे-अ० १ अ० ८ व० २३ मं० ३ ) ॥ २५ ॥

(क) जगतीके दो पाद आदिके और अन्तके ही बीचका पाद गायत्रीका हो। अर्थात् जिस छन्दके पहिले पादमें बारह अक्षर दूसरेमें आठ अक्षर और तीसरे पादमें पुनः बारह अक्षर हों तो इस प्रकार का भी त्रिपाद अनुष्टुप् कहा जाता है।

(ख) जिस छन्दके पहिले पादमें बारह, दूसरे पादमें बारह और तीसरे पादमें आठ अक्षर हों इस प्रकार का भी 'त्रिपाद् अनुष्टुप्'(‡) कहा जाता है।

## बृह(§)ती जागतस्त्रयश्च गायत्राः ॥ २६ ॥

एको जागतः पादः, त्रयश्च गायत्राः, तदा 'बृहती' नाम छन्दो भवति। यथा—

'मत्स्वा सुशिप्र हरिवस्तदीमहे(१)त्वे आ भूषन्ति वेधसः (२)।
तव श्रवास्युपमान्युक्थ्या सुतेष्विन्द्र गिर्वणः (४) ॥'

( ऋग्वेदे-अ० ६ अ० ७ व० ३ मं० २ ) ॥२६॥

---

(*)-(†) अभिय' (अशिशुवी) इति पादपूर्तिः (‡) अनुष्टुब्पदनिर्वचनं निरुक्ते (७-३-१२) "अनुष्टुबनुष्टोभनात्। अनुपश्चाद् स्तोमनापादबन्धैकरोधनात्। किंयिदमनुष्टोभनमिति तत्रैवाह 'गायत्रीमेव त्रिपदां सती चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणम्। गायत्री त्रिभिरष्टाक्षरैः पादैः समाप्यते तस्याश्च पुनरपरश्चतुर्थपादो भवति येन तामेव गायत्रीमनुष्टोमति प्रतिरुणद्धि तस्मादनुष्टुबित्यर्थः।

ननु त्रिपादप्यनुष्टुब्भवतीत्युक्तत्वात्तत्रोक्तान्वर्थस्यानर्थकयमिति शङ्क्यम्, तस्य कान्चित्कत्वात् 'आधिक्येन व्यपदेशा भवति'ति व्यपदेशनियमात्।

अनुष्टुब्भेदाः क्रमतो

( ८, ८, ८, ८, ) ॥ १ ॥
( १२, ८, १२ ) ॥ २ ॥
( १२, २, ८ ) ॥ ३ ॥

अयमत्र संग्रहः।

पादे यदाऽक्षराण्यष्टौ गायत्रीतिबुधैः स्मृता। चतुर्थपादयुक्त्यैव सानुष्टुप्संज्ञका भवेत् ॥ १ ॥
गायत्री यदि मध्यस्था भवेदन्तर्गता पिवा। जगत्यः शिष्टपादेषु साचानुष्टुब्भवेत्त्रिपात् ॥ २ ॥

इत्यनुष्टुप्प्रकरणम्।

(§) बृहती परिबर्हणात्' (नि ७।१२।१०)

जिस छन्दमें जगतीका एक पाद और शेष तीन पाद गायत्रीके हों (अर्थात् जिस छन्दके किसी एक पादमें बारह अक्षर हों और शेष तीन पादोंमें आठ आठ अक्षर हों) उसे 'बृहती' छन्द कहते हैं ॥ २६ ॥

**पथ्या पूर्वश्चेत्तृतीयः ॥ २७ ॥**

'बृहती' इत्यनुवर्तते। *पूर्वः पादो जागतो यदि तृतीयो भवति, अन्ये गायत्राः, तदासौ बृहती 'पथ्या' नाम छन्दो भवति। यथा—

'मा चिदन्यद्विशंसत (१) सखायो मा रिषण्यत (२)।
इन्द्रमित्स्तोता वृषणं सचा सुते (३) मुहुरुक्था च शंसत (४)॥
(ऋग्वेदे-अ० ५ अ० ७ व० १० मं० १) ॥ २७ ॥

पूर्वसूत्रसे 'बृहती' पदकी अनुवृत्ति आती है। पूर्व सूत्रमें संज्ञीकोटिमें पठित प्रथम जगतीका पाद यदि तृतीय हो और प्रथम, द्वितीय, चतुर्थ पाद यदि गायत्री के हों (अर्थात् जिस छन्दके प्रथम पादमें आठ, द्वितीयमें आठ, तृतीय पादमें बारह और चतुर्थ पादमें आठ अक्षरहों) उसे 'पथ्या बृहती' कहते हैं ॥ २७ ॥

**न्यङ्कुसारिणी द्वितीयः ॥ २८ ॥**

'पूर्वश्चेद्' इत्यनुवर्तते। पूर्वश्चेज्जागतः पादो द्वितीयो भवति, शेषाश्च गायत्राः, तदा 'न्यङ्कुसारिणी' नाम्नी बृहती भवति। यथा—

†'मत्स्यपायि ते महः (१) पात्रस्येव हरिवो मत्सरो मदः (२)।
वृषा ते ‡वृष्ण इन्दु (३) र्वाजी सहस्रसातमः (४) ॥'
(ऋग्वेदे—अ० २ अ० ४ व० १८ मं० १) ॥ २८ ॥

पूर्वसूत्रसे पूर्व शब्दकी अनुवृत्ति चली आरही है। प्रथम सूत्रके संज्ञीकोटिमें प्रथम पठित जगतीका पाद वह यदि द्वितीय हो और शेष प्रथम, तृतीय और चतुर्थ पाद यदि गायत्रीके हों। (अर्थात् जिस छन्दके पहिले पादमें आठ अक्षर, दूसरेमें बारह अक्षर, तीसरे और चौथेमें फिर आठ आठ अक्षरहों) उसे 'न्यङ्कुसारिणी' बृहती कहते हैं ॥ २८ ॥

**स्कन्धोग्रीवी क्रौष्टुकेः ॥ २९ ॥**

इयमेव 'न्यङ्कुसारिणी' क्रौष्टुकेराचार्यस्य मतेन 'स्कन्धोग्रीवी'

---

* पूर्वं सूत्रे उद्देश्यकोटौ प्रथम इत्यर्थः।

† 'मत्सीय' इति। ‡ 'वृषण इति पूर्त्यां विराट्त्वाद्वा न दोषः'।

**नाम छन्दो भवति । आचार्यग्रहणं पूजार्थम् ॥ २९ ॥**

क्रौष्टुकी आचार्यके मतमें इस 'न्यङ्कुसारिणी' की 'स्कन्धोग्रीवी' संज्ञा है ॥२९॥

## उरोबृहती यास्कस्य ॥ ३० ॥

**इयमेव 'न्यङ्कुसारिणी' यास्कस्याचार्यस्य मतेन 'उरोबृहती' नाम्नी भवति ॥ ३० ॥**

यास्काचार्य इसी न्यङ्कुसारिणीको उरोबृहती कहते हैं ॥ ३० ॥

## उपरिष्टाद्बृहत्यन्ते ॥ ३१ ॥

**यदा जागतः पादोऽन्ते भवति, तदा 'उपरिष्टाद्बृहती' नाम भवति । यथा—**

**'न तमंहो न दुरितं (१) देवासो अष्ट *मर्त्यम् (२)**
**सजोषसो यमर्यमा (३) मित्रो नयन्ति वरुणो अतिद्विषः (४)॥'**
**( ऋग्वेदे-अ० ८ अ० ७ व० १३ मं० १ ) ॥३१॥**

जब जगतीका पाद अन्तमें हो पहिला, दूसरा, तीसरा पाद गायत्रीका हो तो उस बृहतीकी 'उपरिष्टात् बृहती' संज्ञा होती है । (अर्थात् पहिले पादमें आठ, दूसरेमें आठ, तीसरेमें भी आठ और चौथे पादमें यदि बारह अक्षर हों तो) उसे 'उपरिष्टाद्बृहती' कहते हैं ॥ ३१ ॥

## पुरस्ताद्बृहती पुरः ॥ ३२ ॥

**स एव जागतः पादः पूर्वश्चेद्‌ भवति, शेषाश्च गायत्राः, तदा**

---

भिर्वाचष्निपह्वयामहे ॥ (४) ( शु० य० ११ । ४२ )

* 'मर्तीयम्' इति पूर्तिः ।

पथ्या बृहती यथा यजुर्वेदे—

कदाचन स्तरीरसि(१) नेन्द्र सश्चसि दाशुषे (२) । उपोपेन्नु मघवन् भूय इन्नु ते (३) दानं देवस्य पृच्यते

न्यङ्कुसारिणी यथा यजुर्वेदे ) ( शु० य० ३ ३४ )

अपो देवीरुप सृज (१) मधुमतीरयक्ष्माय प्रजाभ्यः । (२) तासामास्थानादुज्जिहता (३) मोषधयः सुपिप्पलाः ( शु० य० ११ । ३८ ) ।

उपरिष्टाद्बृहती यथा यजुर्वेदे—

ऊर्ध्व ऊ षु ण ऊतये (१) तिष्ठा देवो न सविता (२) ऊर्ध्वो वाजस्य सनिता (३) यदञ्जि-

